# जय भारतभूमे !

## (संस्कृतकाव्यम्)

प्रणेता

रमाकान्त शुक्लः

१९८१

# जय भारतभूमे !

(संस्कृतकाव्यम्)

प्रणेता

डा० रमाकान्तशुक्लः
दिल्लीविश्वविद्यालयस्य राजधानीकालेजे
हिन्दी-विभागे वरिष्ठप्राध्यापकः
नई दिल्ली-११००१५

१९८१

प्रकाशिका

देववाणी-परिषद्, दिल्ली
६, वाणी-विहारः, नयी दिल्ली-११००५९
(भारतम्)

जय भारतभूमे ! (संस्कृतकाव्यम्)

रचयिता : डा० रमाकान्त शुक्ल:
प्रकाशिका : देववाणी-परिषद् दिल्ली
आर-६, वाणी-विहार:,
नयी दिल्ली-११००५९
मुद्रक : देववाणी प्रिण्टर्स,
उत्तम नगर, नई दिल्ली-५९.
संस्करणम् : प्रथमम्, १९८१
प्रतिरूपाणि : ५००
मूल्यम् : त्रिंशद्रूप्यकाणि ।रु० ३०-००


*Jaya Bhāratabhūme*
(Sanskrit Poetry)
Author : Shukla. Dr. Ramakant
Publisher : Devavani Parishad, Delhi
R-6, Vani Vihar,
New Delhi-1 10059.
Printer : Dev Vani Printers
Uttam Nagar, New Delhi.
Edition : First, 1981.
Copies : 500
Price : Rs. 30-00 (Rs. Thirty only)

# समर्पणम्

स्वर्गादपि गरीयस्याः जन्मभूम्याः

स्तवनमिदं

जनन्यै

(श्रीमत्यै प्रियम्वदाशुक्लायै)

सादरं समर्पयति

२४-१२-१९८१

उत्सङ्गलालितो
रमाकान्तः

## अनुक्रमः

# प्रास्ताविकम्

भारतमवलम्ब्य मया कानिचित् पद्यानि छात्रावस्थायां रचितान्यासन् । गतवर्षे च 'भाति मे भारतम्' इत्याख्यं मद्रचितं काव्यं प्रकाशितमभूत् । ततः परमपि मया कानिचित्पद्यानि भारतमवलम्ब्य प्रणीतानि । तेषामेवात्र 'जय भारतभूमे' इतिशीर्षकायामस्या पुस्तिकायां सङ्कलनं कृतम् । एतेष्वनेकानि पद्यानि आकाशवाण्या लखनऊकेन्द्रेण समायोजितायां विशिष्टसंस्कृतकविसभायां, देववाणीपरिषदायोजितेऽखिलभारतीयसंस्कृतकविसम्मेलने च मया पठितानि । केषाञ्चित् पद्यानामाकाशवाण्या लखनऊकेन्द्रात् संगीतबद्धा प्रस्तुतिरपि कलाकारैर्विहिता । ये श्रोतार एतेषां पद्यानां मुद्रितं सङ्कलनमिच्छन्ति स्म, आशासे, अस्याः पुस्तिकायाः प्रकाशनेन तेषामाकांक्षा पूर्णा स्यात् ।

अत्र भारतस्य कविसम्मतं स्वरूपमुन्मील्यते । प्रशस्तिपरकेष्वेतेषु पद्येषु भारतस्य कटुयाथार्थ्यस्य वर्णनं नाभिधया विधीयते । किन्तु यदपि प्रशंसापरं भणितं तत्रापि अतिशयोक्तिर्नास्ति, अपि तु स्वभावोक्तिरेवास्ति । 'सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम्' इति वाक्यमनुसरता मया प्रियमेव सत्यमुक्तम् । तथापि यदि क्वचित्किञ्चिदप्रियत्वमपि व्यज्येत तर्हि तदपि मम जन्मभूमेर्वैशिष्ट्यमेव स्वीकरणीयम् ।

देववाणी-परिषदः कृते कृतज्ञतामनुभवामि ययास्याः पुस्तिकायाः प्रकाशनमनुष्ठितम् ।

२४-१२-१९८१<br>आर ६ वाणी-विहारः,<br>नयी दिल्ली-११००५९ ।

विद्वच्चरणपद्मचञ्चरीकः<br>रमाकान्तशुक्लः

## शुद्धिपत्रम्

(प्रथममशुद्धं रूपं, तदनु शुद्धं रूपं, तदनु कोष्टके पृष्ट-संख्या तदनु च पङि्क्तसंख्या दीयन्ते । पङि्क्तगणना-काले शीर्षक-संख्या-पङ्क्त्योर्गणना नैव कार्या । कृपालवः पाठकाः शुद्धिपत्रानुसारं त्रुटीः संशोधयितुं सादरं प्रार्थ्यन्ते ।)

**शरणागतपरिपालशीले** - शरणागतपरिपालन-शीले (१३/३), **शस्यशामलवसनवृते** - शस्यश्यामल-वसनवृते(१३/४), ० **जिनतेह** ० - ०जिनगेह० (१६/२), **बद्रीविशाल** - बदरीविशाल (२८/५), **प्रेयःश्रेयः-ससाधनिके** - प्रेयःश्रेयःसाधनिके (२७/२), **समाराधिता-नेत्रैकशास्त्रैश्च** - समाराधिसानेकशास्त्रैश्च (३७/७), ० **यौवनश्री** - ० यौवनश्रीः (३८/३), **चरित्र्यपुञ्जैः** - चारित्र्यपुञ्जैः (४२/२), **बुभुक्षपरो** - बुभुक्षापरो (४७/६), **विश्वयुते** - विश्वनुते (५५/८)

# जय भारतभूमे !

(१)

गङ्गायमुनाकावेरी-

कृष्णागोदाचलवीचियुते !

शिप्राशाबरमतीनर्मदा-

गण्डकतुङ्गतरङ्गयुते !

शोणचनाबविपाशासरयू-

ब्रह्मपुत्रकल्लोलकरे !

जय जय जय हे भारतभूमे !

जय जय जय भारतभूमे !

❀

(२)

पूर्वापरजलनिधिप्रक्षालित-

केरलतामिलनाडुपदे !

एलाललितलवङ्गलता-

परिवर्द्धितविहगामोदमदे !

विन्ध्यहिमालयसह्यमलय-

पारसगिरिनारावलीधरे !

जय जय जय हे भारतभूमे !

जय जय जय भारतभूमे !

❀

(३)

बोकारो-राउरकेला-स्वन-

बधिरीकृतदिग्गजकर्णे !

तारापुरसंयन्त्र-भिलाई-

वीरभद्र - भास्वरवर्णे !

भव्य-बरौनी-मथुरा-

तैलविशोधकीर्तिप्रकाशयुते !

जय जय जय हे भारतभूमे !

जय जय जय भारतभूमे !

❀

(४)

वृत्तिहीन-निर्धन-शोषित-

मानवपरिसान्त्वनयत्नपरे !

भिन्नजातिकुलधर्मवर्ण-

लोकैक्यापादनयत्नपरे !

लोकतन्त्रपरिरक्षणशीले !

अशरणशरणविधानकरे !

जय जय जय हे भारतभूमे !

जय जय जय भारतभूमे !

❀

(५)

ग्रामयुते ! पुरखेटयुते !

बहुनगरयुते ! नरनारियुते !

नेतृयुते ! अभिनेतृयुते !

कविकोविदविद्वद्यूथयुते !

योगियुते ! बहुभोगियुते

ऽमितकलायुते ! बहुपर्वधरे !

जय जय जय हे भारतभूमे !

जय जय जय भारतभूमे !

❀

(६)

काशीमथुरापुरीद्वारका-

हरिद्वारमाहात्म्ययुते !

सेतुबन्धकन्याकुमारिका-

गङ्गासागरकीर्तियुते !

बदरीनाथ-वैष्णवी-ज्वाला-

हेमकुण्डशुभयशोधरे !

जय जय जय हे भारतभूमे !

जय जय जय भारतभूमे !

❀

(७)

नवजलधरवर्षितकीलाल-

समेधितकर्षकवृन्दवृते !

शरणागतपरिपालशीले

शस्यशामलवसनवृते !

सर्षपपुष्प-रसालमुकुल-

संवर्द्धितप्रियपिकमोदमदे !

जय जय जय हे भारतभूमे !

जय जय जय भारतभूमे !

❀

(८)

ताशकन्दशिमलानुबन्ध-

दर्शितशान्त्यनुरागोद्रेके !

सीमान्तेषु प्रख्यापितनिज-

भटरणविजगीषोद्रेके !

हरिकोट्टा-पोखरणप्रसारित-

निजविज्ञानोन्नतिगाथे !

जय जय जय हे भारतभूमे !

जय जय जय भारतभूमे !

❀

(६)

कालिदासतुलसीकम्बन-

गालिबरवीन्द्ररसखानयुते !

पम्परन्नजयदेवसूर-

विद्यापतिपन्तप्रसादनुते !

ब्रह्मानन्दसहोदररस-

मज्जनकोविदकविकाव्यधरे !

जय जय जय हे भारतभूमे !

जय जय जय भारतभूमे !

❀

(१०)

शेषमहेशदिनेशसुरेश-

रमेशप्रदर्शितनिजलीले !

मधुकैटभदशवदनकंसमुर-

वृत्रासुरशिशुपालकले !

शिबिदधीचिप्रह्लादहरि-

श्चन्द्रादिचरित्रोज्ज्वलशोभे !

जय जय जय हे भारतभूमे !

जय जय जय भारतभूमे !

❀

(११)

गिद्दा-भँगड़ा-रास-चर्चरी-

लोकनृत्यहृतजनचित्ते !

भरतनाट्य-कत्थक-कथाकली-

नृत्यतरङ्गितनिजचित्ते !

घेर-डाँडियारास-विनर्तित-

नरनारीचयकेलिधरे !

जय जय जय हे भारतभूमे !

जय जय जय भारतभूमे !

❀

(१२)

कुम्भ-सोनपुर-नासिकमेला-

रथयात्राविस्तृतकृत्ये !

वैशाखी-विजया-पोङ्गल-

होली-दीपालीकृतनृत्ये !

क्रिसमस-ईदमुबारक-कोजा-

गिरीपूर्णिमाह्लादयुते !

जय जय जय हे भारतभूमे !

जय जय जय भारतभूमे !

(१३)

अगणितमन्दिरमस्जिद-

गिरिजागृहजिनतेहगुरुद्वारे !

नवनवमठसमाजसंस्थे

नानाविधकुललोकाचारे !

अगुणसगुणप्रणिधानशुभे

जय भक्तिज्ञानकर्मभूमे !

जय जय जय हे भारतभूमे !

जय जय जय भारतभूमे !

❀

(१४)

हीराकुण्ड-भाखड़ा-नागल-
नागार्जुनसागरबन्धे !
प्रसृतकुशेशयकेतकपाटल-
ललितलवङ्गलतागन्धे !
जीवनदायिनि! विद्युद्दायिनि!
प्रकृतिप्रमोदकलाभूमे !
जय जय जय हे भारतभूमे !
जय जय जय भारतभूमे !

❀

(१५)

रामकृष्णगौतमगान्धी-

नेहरूरवीन्द्रप्रेरितलोके !

मानस-बीजक-थिरुक्कुरल-

भारत-रामायण-हृतशोके !

सत्त्वोद्रेकयुते कविकर्म-

युते लोकाराधनभूमे !

जय जय जय हे भारतभूमे !

जय जय जय भारतभूमे !

❀

(१६)

नवलरसालमुकुलसौरभ-

भावितभृङ्गालीगानधरे !

चम्पकबकुलनागकेसर-

पाटलपाटीरामोदधरे !

शीतलमन्दसुगन्धसमीरे !

धृतकेकीकोकिलकीरे !

जय जय जय हे भारतभूमे !

जय जय जय भारतभूमे !

❀

(१७)

आम्रलकुचकदलीनारङ्गक-
सेवास्वादकविहगयुते !
अभ्रंलिहयन्त्रालयचिमनी-
धूमैर्मलिनीकृतककुभे !
यवगोधूमशालिचणक-
क्षेत्रैः शस्यश्यामलैर्युते !
जय जय जय हे भारतभूमे !
जय जय जय भारतभूमे !

❀

(१८)

नग्नबुभुक्षितवासविहीन-

जनानामेकाश्रयभूते !

जटिलप्रपञ्चप्रताडित-

वृत्तिविहीनजनैकाश्रयभूते !

अशरणशरणास्पदभूते

सन्तोषमौनमौखर्ययुते !

जय जय जय हे भारतभूमे !

जय जय जय भारतभूमे !

❀

(१६)

दारिद्र्यानलदग्धदेह-

जीवौघोद्धारणयत्नपरे !

शोषितकर्षककार्मिकपीडो-

न्मूलनहेत्वाक्रन्दकरे !

जय जय हे युद्धाग्निविरोधिनि !

जय जय पञ्चशीलभूमे !

जय जय जय हे भारतभूमे !

जय जय भारतभूमे !

❀

(२०)

जागृतिशीले ! क्रान्तिविलासे!

कान्तियुते ! सम्मानयुते !

विद्वत्तोषिणि ! मानसपोषिणि !

समरविरोषिणि ! शान्तियुते !

सत्याहिंसापरहितकरुणा-

सर्वंसहता - प्रीतिधरे !

जय जय जय हे भारतभूमे !

जय जय जय भारतभूमे !

❀

(२१)

जय हरिनामामृततृप्ते

जय प्रेयःश्रेयःससाधनिके !

ब्राह्मक्षात्रप्रभापूरे

व्यापारयुतेऽमितकर्मयुते !

त्यागभोगभूमे जय जय जय

'जनगणमन' जयगानयुते !

जय जय जय हे भारतभूमे !

जय जय जय भारतभूमे !

❀

(२२)

गङ्गायमुनासरयूवरुणा-

वीचिपवित्रीकृततीर्थे !

उपकाशी-काशी-प्रयाग-

लक्षितविहसद्विद्यातीर्थे !

विश्वनाथ - बद्रीविशाल-

राघवयादवपूजाशीले !

जय जय जय हे भारतभूमे !

जय जय जय भारतभूमे !

❀

(२३)

वायु-भूमि-जलयानगणै-

दर्शितनिजशक्तिभरालोके !

टैङ्कृतोपगर्जनप्रख्यापित-

निजबलभूतिभरालोके !

नित्यनवीनोपग्रहमोक्षण-

प्रभृतिप्रदर्शितवर्चस्वे !

जय जय जय हे भारतभूमे !

जय जय जय भारतभूमे !

(२४)

तव वृन्दाविपिने विहरति

कृष्णो गोपीजनमुदकारी ।

तव कैलासे हरति हरो

मन्मथविषमहिमालाधारी ।

तव साकेते क्रीडति रामो

मिथिलायां जनककुमारी ।

जय जय जय हे भारतभूमे !

जय जय जय भारतभूमे !

❀

(२५)

दलपरिवर्तनकारिनेतृ-

निन्दां कुर्वाणास्तव लोकाः ।

राष्ट्रभक्तिमीश्वरपूजा-

मनिशं मन्वानास्तव लोकाः ।

दुरवस्थां समूलमुन्मूलयितुं

कृतकल्पास्तव लोकाः ।

जय जय जय हे भारतभूमे !

जय जय जय भारतभूमे !

❀

(२६)

त्वयि गायति शंकरपादश्रीः

'भज गोविन्दं मूढमते !

'सिया राममय सब जग जानी'

त्वयि तुलसीदासो ब्रूते ।

भक्तास्त्वयि गायन्ति निमीलित-

नेत्रा 'जय जगदीश हरे' !

जय जय जय हे भारतभूमे !

जय जय जय भारतभूमे !

❀

(२७)

गौरवशालिनि मोदप्रदायिनि

प्रकृतिनटीलीलाभूमे !

चतुर्वर्गफलदायिनि

भगवन्नामरूपलीलाभूमे !

श्रमशक्तेरुल्लासविधायिनि

रमाकान्तशुक्लाभिनुते !

जय जय जय हे भारतभूमे !

जय जय जय भारतभूमे !

❀

(२८)

परिमितशब्दैरमितगुणान्

गायामि कथं ते वद पुण्ये !

चुलुके जलधिं तुङ्गतरङ्गं

करवाणि कथं वद धन्ये !

जय सुजले सुफले वरदे

विमले कमला-वाणी-वन्द्ये !

जय जय जय हे भारतभूमे !

जय जय जय भारतभूमे !

❀

# भजे भारतम् !

(१)

सदाज्ञानविध्वंसकारी मनोज्ञः
समालोक्यते यत्र वाणी-विहारः ।
विधत्ते स्वमित्रं च यः प्राणिमात्रं
भजेऽहं मुदा भारतं तं स्वदेशम् ।
भजे तं मुदा भारतं दिव्यदेशम् ॥

(२)

कुटुम्बं धरित्री दया यस्य मित्रं
मनुष्यत्वसेवा यदीयोऽस्ति धर्मः ।
असत्यं च शत्रुः समस्तेऽपि लोके
भजेऽहं मुदा भारतं तं स्वदेशम् ।
भजे तं मुदा भारतं दिव्यदेशम् ॥

❀

(३)

प्रजातन्त्ररक्षा यदीयं हि लक्ष्यं
तितिक्षा यदीयास्ति संसारगीता ।
तथैवार्जवं यस्य वित्तं वरेण्यं
भजेऽहं मुदा भारतं तं स्वदेशम् ।
भजे तं मुदा भारतं दिव्यदेशम् ।।

(४)

स्वकीयां बुभुक्षां पिपासां नियम्य
सदा रक्षिता येन भीताः प्रपन्नाः ।
यमाहुर्विदग्धास्तथा शान्तिदूतं
भजेऽहं मुदा भारतं तं स्वदेशम् ।
भजे तं मुदा भारतं दिव्यदेशम् ।।

❀

(५)

न मम्लौ यदीयं मुखं निःस्वतायाम्
विमूढं चित्तं च वित्तोपलाभे ।
सदा दानशीलश्च यो याचकेभ्यो
भजेऽहं मुदा भारतं तं स्वदेशम् ।
भजे तं मुदा भारतं दिव्यदेशम् ॥

(६)

स्फुरद्रत्नसङ्काशविद्वद्वरेण्यैः
समाराधितानेत्रैकशास्त्रैश्च शिष्यैः ।
गभीरैश्च चित्तैः सदालङ्कृतो यो
भजेऽहं मुदा भारतं तं स्वदेशम् ।
भजे तं मुदा भारतं दिव्यदेशम् ॥

❀

(७)

क्वचिज्जाह्नवी तुङ्गवीचिः प्रसन्ना
क्वचिद्गानुजागोमतीव्यासशिप्राः ।
क्वचिन्नर्मदायौवनश्री यदन्तो
भजेऽहं मुदा भारतं तं स्वदेशम् ।
भजे तं मुदा भारतं दिव्यदेशम् ।।

(८)

क्वचिद्वीरपुञ्जः समुत्साहधीरः
क्वचिन्नेतृवर्गः प्रजोद्बोधरक्तः ।
क्वचिच्छीलवान् यत्र सङ्घो मुनीनां
भजेऽहं मुदा भारतं तं स्वदेशम् ।
भजे तं मुदा भारतं दिव्यदेशम् ।।

❀

(९)

क्वचिद्विज्ञगोष्ठी क्वचिच्छास्त्रचर्चा
क्वचित्काव्यसन्ध्या क्वचिन्नाट्यवेला ।
क्वचिद्गीतिगानं च यस्य स्वभावो
भजेऽहं मुदा भारतं तं स्वदेशम् ।
भजे तं मुदा भारतं दिव्यदेशम् ॥

(१०)

कला कालिदासस्य बाणस्य वाणी
रवीन्द्रस्य गीतिर्विवेकस्य वाणी ।
लता-तानसेन-स्वरा यत्र मुग्धाः
भजेऽहं मुदा भारतं तं स्वदेशम् ।
भजे तं मुदा भारतं दिव्यदेशम् ॥

❀

(११)

निवासः सतामाश्रयः सद्गुणानाम्
जरामृत्युहीनः प्रकृत्या विलासः ।
तथा सच्चिदानन्दसेवापरो यो
भजेऽहं मुदा भारतं तं स्वदेशम् ।
भजे तं मुदा भारतं दिव्यदेशम् ।।

(१२)

धनं विद्यतेऽध्यात्म्यसंज्ञं यदीयं
जगद्दुःखसङ्घातविध्वंसदक्षम् ।
कला यस्य चेतोहरा भान्ति लोके
भजेऽहं मुदा भारतं तं स्वदेशम् ।
भजे तं मुदा भारतं दिव्यदेशम् ।।

❀

(१३)

कलाज्ञानविज्ञानवाणिज्यशोधै-
स्तथा कल्पनाभावनातर्कबोधैः ।
त्रिलोक्यां त्रिकाले प्रभाभासुरो यो
भजेऽहं मुदा भारतं तं स्वदेशम् ।
भजे तं मुदा भारतं दिव्यदेशम् ॥

(१४)

अतीतं भविष्यत्तथा वर्तमानं
जगत्प्रेरणादायकं वै यदीयम् ।
चतुर्वर्गसिद्धिं दिशन् यः प्रसिद्धो
भजेऽहं मुदा भारतं तं स्वदेशम् ।
भजे तं मुदा भारतं दिव्यदेशम् ॥

❁

(१५)

पवित्रैर्व्रतैरुत्सवैस्तीर्थसंघै-

स्तथा दर्शनज्ञानचारित्र्यपुञ्जैः ।

नवाभिः कथाभिस्समृद्धश्च योऽस्ति

भजेऽहं मुदा भारतं तं स्वदेशम् ।

भजे तं मुदा भारतं दिव्यदेशम् ।।

(१६)

क्षिपःनैपलं भास्करं चार्यभट्टं

हसन् - भाखड़ाभा-नरौरा-मिषेण ।

भिलाई-बुकारोस्वनैर्यश्च गर्जन्

भजेऽहं मुदा भारतं तं स्वदेशम् ।

भजे तं मुदा भारतं दिव्यदेशम् ।

❀

(१७)

क्वचिच्चञ्चलायाः नवीनैर्विलासैः

क्वचिच्छारदायास्तथा शुक्लहासैः ।

सदा नूतनो मोदते राजते यो

भजेऽहं मुदा भारतं तं स्वदेशम् ।

भजे तं मुदा भारतं दिव्यदेशम् ॥

(१८)

क्वचिद्राजनीतेर्वितानैः प्रपूर्णः

क्वचिद्गृध्रगोमायुसंवादपूर्णः ।

क्वचिद्यश्च साहित्यसंगीतपूर्णः

भजेऽहं मुदा भारतं तं स्वदेशम् ।

भजे तं मुदा भारतं दिव्यदेशम् ॥

❀

(१९)

क्वचिच्चाटुकारैः क्वचिन्मानवित्तैः

क्वचिन्मित्रघातैः क्वचिद्भीतचित्तैः ।

क्वचित्सिंहनादैश्च यश्चित्रवर्णो

भजेऽहं मुदा भारतं तं स्वदेशम् ।

भजे तं मुदा भारतं दिव्यदेशम् ॥

(२०)

नितान्तं विहीनः कदाचित्तु यः स्याद्

गृहस्फोटकैर्दस्युभिः षिड्गसंघैः ।

तथा वञ्चकैस्तस्करैर्भ्रष्टकृत्यैः

भजेऽहं मुदा भारतं तं स्वदेशम् ।

भजे तं मुदा भारतं दिव्यदेशम् ॥

❀

(२१)

बलात्कारहत्यापहारप्रहाराः

अशिक्षावधूदाहभिक्षाप्रचाराः ।

कदाचित्तु लुप्ताः भविष्यन्ति यस्मात्

(अवश्यं विलुप्ता भविष्यन्ति यस्मात्) ।

भजेऽहं मुदा भारतं तं स्वदेशम् ।

भजे तं मुदा भारतं दिव्यदेशम् ॥

(२२)

'मदीयः स्वदेशः', 'प्रियं भारतं मे'

'मदीया प्रिया मातृभूमिः पवित्रा' ।

इतीत्थं त्रिलिङ्ग्यां जनैर्गीयते यो

भजेऽहं मुदा भारत तं स्वदेशम् ।

भजे तं मुदा भारतं दिव्यदेशम् ॥

❀

(२३)

न यन्त्राङ्कुशः कस्यचिद्वाचि शक्यो
न वा कार्यजाले, न वा चित्तवृत्तौ ।
विनीतोऽपि यः स्वाभिमानव्रतोऽस्ति
भजेऽहं मुदा भारतं तं स्वदेशम् ।
भजे तं मुदा भारतं दिव्यदेशम् ॥

(२४)

मदीया परिच्छिन्नवाणी यदीयान्
अशेषान् विशेषान् यथार्थं प्रगातुम् ।
अशक्तास्त्यशक्तास्त्यशक्तास्ति नूनं
भजेऽहं मुदा भारतं तं स्वदेशम् ।
भजे तं मुदा भारतं दिव्यदेशम् ।

❀

(२५)

अहो यस्य लोकोत्तरैः स्तोत्रपुञ्जैः
रमाकान्तशुक्लोऽपि धन्योऽद्य जातः ।
विदग्धाशिषां राशिभिर्लाल्यते च
भजेऽहं मुदा भारतं तं स्वदेशम् ।
भजे तं मुदा भारतं दिव्यदेशम् ।।

(२६)

न यत्रास्तु कश्चिद्बुभुक्षपरो ना
न वा वासहीनो न वासोविहीनः ।
न वा शोषितः क्वापि केनापि कोऽपि
भजेऽहं मुदा भारतं तं स्वदेशम् ।
भजे तं मुदा भारतं दिव्यदेशम् ।।

❀

(२७)

प्रणम्यः प्रणम्यो सदा यः स्वदेशः

सदा कीर्तनीयः सदा वन्दनीयः ।

सदा वर्धतां मोदतां राजतां यो

भजेऽहं मुदा भारतं तं स्वदेशम् ।

भजे तं मुदा भारतं दिव्यदेशम् ॥

(२८)

उपेक्ष्येत नो यत्र वैदुष्यपुञ्जो

न वै वर्धतां यत्र दारिद्र्यपुञ्जः ।

तथा दुर्बलाघात आस्तां न यत्र

भजेऽहं मुदा भारतं तं स्वदेशम् ।

भजे तं मुदा भारतं दिव्यदेशम् ॥

❋

# मम भारतं विजयते

(१)

निगमागमैरुपेतं विज्ञःनरत्नरम्यम् ।
वेदाङ्गपूतगात्रं मम भारतं विजयते ॥

(२)

लोकप्रबोधशीलं शोकप्रणाशशीलम् ।
चेतोविकासकुशलं मम भारतं विजयते ॥

(३)

सह्याद्रिविन्ध्यहिमवत्सप्ताद्रिकीर्तितश्री ।
गंगाजलैः पवित्रं मम भारतं विजयते ॥

(४)

क्वापि श्रमेण सहितं क्वापि प्रमोदभरितम् ।
नानाक्रियाकलापं मम भरतं विजयते ॥

(५)

गांधीरवीन्द्रगौतमनहरूप्रभृत्यनेकैः ।
जननायकैः समृद्धं मम भारतं विजयते ॥

❀

(६)

कम्बन्कबीरतुलसीकविकालिदासगीतम् ।
विबुधैः सदैव चेष्टं मम भारतं विजयते ॥

(७)

कोणार्कताजसाँचीखजुराहोसारनाथैः ।
कुतुबादिना च महितं मम भारतं विजयते ॥

(८)

श्रुतभाखड़ानरौराकोटाभिलाइकल्पैः ।
संयन्त्रकैः समिद्धं मम भारतं विजयते ॥

(९)

सिंहस्थकुम्भसारणनवचण्डिकादिभव्यैः ।
मेलापकैः प्रसन्नं मम भारतं विजयते ॥

(१०)

विश्वस्य बान्धवं यत् मोक्षस्य साधकं यत् ।
गायच्च पञ्चशीलं मम भारतं विजयते ॥

(११)

निन्दन्तु नीतिनिपुणाः यदि वा स्तुवन्तु कामम् ।
नित्यं विकाशमानं मम भारतं विजयते ॥

❀

# भारतभूमिर्विलसति

(१)

वैदिक-सौगत-नास्तिक-
चार्वाकार्हत-प्रभृतिबहुधर्माः ।
वादे वादे बोधं,
यत्र लभन्ते मुदोत्फुल्लाः ॥

(१)

औदार्यं धार्मिक्यम्,
आध्यात्म्यं नित्यप्रगतिशीलत्वम् ।
अन्ये चापि यदीयाः,
विश्वस्मिन् सद्गुणाः ख्याताः ॥

(३)

प्रकृतिविलासो यस्यां,
विकिरति हासं स्वकीयमवदातम् ।
कष्टसहिष्णुत्वं च,
यस्याः प्रकृतौ सहजसिद्धम् ॥

❀

(४)

विरोधिनां तत्त्वानां,
सत्त्वानाञ्चापि विषमवृत्तीनाम् ।
समन्वयं या कुरुते,
नवनवशोभाभिवृद्ध्यर्थम् ॥

(५)

आशावादरतायाः,
आदर्शोद्घोषणासुनिपुणायाः ।
यस्या निखिलापीयं,
वसुधैव कुटुम्बकं भवति ॥

(६)

लोकोत्तरचरितानां,
लोकाराधननियुक्तमनुजानाम् ।
या जन्मभूमिरुदिता,
रुदिता अपि यत्र हसिताः स्युः ॥

❀

(७)

स्नेहं दयां च सौख्यं,
जायामपि यत्र लोकपूजार्थम् ।
मुञ्चन् रामोऽद्यापि,
भगवानिव पूज्यते लोकैः ॥

(८)

गीता गङ्गा गावो,
गीर्वाणगवी तथा च गीतानि ।
ग्रामाः गुरवो ग्रन्थाः,
यस्या गरयन्ति गरिमाणम् ॥

(९)

अक्रोधेन क्रोधं,
साधुतया चाप्यसाधुतासरणिम् ।
दानेन या कदर्यं,
जयेदहिंसाबलेन हिंसां च ॥

❀

(१०)

सत्पुत्राणां हि यथा,
कुपुत्रकाणां तथैव या चेष्टाः ।
समबुद्ध्या किल सहते,
यतो न माता कुमाता स्यात् ॥

(११)

वाणीविहारशीला,
शीलाब्धितरङ्गिता जलधिरशना ।
सुजला सुफला शस्य-
श्यामा सुखदा तथा वरदा ॥

(१२)

अगणितगुणगणपूर्णा,
चित्रविचित्रैर्जनैस्सदा लसिता ।
आर्या भारतभूमि-
र्विलसति जगतीतले सेयम् ॥

❀

# जय भारतमेदिनि विश्वनुते !

(१)

हिमवत्कलहासमरीचिसिते !
यमुनाजलनीलविभामहिते !
रविचुम्बितकोकनदारुणिते !
जय भारतमेदिनि विश्वनुते !

(२)

नवसर्षप-पीतदुकूलयुते
बहुशस्यसमूहविभाहरिते !
मलयानिलमोदकलाकलिते !
जय भारतमेदिनि विश्वयुते !

(३)

अतिपुण्यपुरातनपद्धतिभि-
र्नवनूतनयोगप्रयोगचयैः !
समयोचितनीतिबलैः सहिते !
जय भारतमेदिनि विश्वनुते !

❀

(४)

त्रिविधैः खलु तापचयैर्विकले
मनुजे शुभनिर्वृतिमादधती ।
नवमङ्गलदानविधानकरे !
जय भारतमेदिनि विश्वनुते !

(५)

मुनिभिर्मनुजैर्दनुजैर्विबुधैः
कविभिर्नवचित्रकलैश्च तथा ।
निजजन्म सुजन्मसु कामयिते !
जय भारतमेदिनि विश्वनुते !

(६)

जय वेदविभासितचित्तगुहे !
बहुदर्शनगोप्यरहस्ययुते !
अपवर्गसुभक्तिविधानकरे !
जय भारतमेदिनि विश्वनुते !

❀

(७)

अभिमानधनैः रणशौण्डभटैः
कृषिकर्मपरैः श्रमिकैर्लसिते ।
शुचिशान्तिसुधाभरिते वरदे
जय भारतमेदिनि विश्वनुते !

(८)

जय नैकप्रदेशप्रभालसिते !
बहुवर्णजनौघविभालसिते !
बहुलोकसुरीतिरसैः सरसे
जय भारतमेदिनि विश्वनुते !

(९)

करुणाकलिते ! मुदिताभरिते !
सरसे ! सरले ! मृदुले ! ललिते !
सुदृढे ! दुरितौघविनाशकरे !
जय भारतमेदिनि ! विश्वनुते !

❀

# भारताख्यः स्वदेशः

(१)

सलिलनिधितरङ्गैर्धौतपादाम्बुजोऽसौ
हिमगिरिशुभहासैर्भासयन्नाननं स्वम् ।
प्रकृतिकलविलासैर्मोदकारो जनानां
जयति जगति नित्यं भारताख्यः स्वदेशः ॥

(२)

शिखिकुलकलकेका काकली कोकिलानाम्
कलयति कलकाले कान्तकान्तारप्रान्तान् ।
प्रकृतिकलविलासान् यत्र पश्यन्ति नित्यं
विकचकमलनेत्रैर्हर्षफुल्लैस्सरांसि ॥

(३)

नवपरिमलगन्धैर्मन्दशीतैः समीरैः
प्रकृतिनववधूटीस्वाङ्गरागैः परागैः ।
धृतमधुकरपुञ्जैर्गुञ्जितैर्मञ्जुकुञ्जे-
र्विलसति मधुमत्तो यत्र राजा ऋतूनाम् ॥

❀

(४)

भृगुकलकलनादैः किञ्चिदाभाषयन्त्यो
जलपतनजफेनैर्मोदमाना हसन्त्यः ।
मरकततृणवासैरावृता यत्र लुब्धाः
विदधति गिरिमालाः स्वैः पयोधृद्भिराशाः ॥

(५)

भ्रमिकरजलवीचिभ्रू कटाक्षान् क्षिपन्त्य-
स्तटगतखगशब्दैः सिन्धुमाकारयन्त्यः ।
धृतबहुविधरत्नं यान्ति लावण्यपूर्णं
बहुनदिनदधाराः यत्र नित्यं नदीशम् ॥

(६)

वनविटपिकदम्बैः केलिलोलाकदम्बै-
र्मुरलिवटसनाथैर्भृङ्गकृष्णैः स्थलैश्च ।
चलरवितनयायाः श्यामिकाभिश्च यत्रा-
नुभवति खलु वृन्दाकाननं कृष्णमीशम् ॥

❋

(७)

भवति मृदुलशोभा सर्षपाणां वसन्ते
शरदि कमलराशिः प्रस्फुटो जायते च ।
हरितवसनशोभां वर्द्धयन्ती पृथिव्या
विलसति तृणराजिर्यत्र वर्षर्तु काले ॥

(८)

कनकगुणनिबद्धैः कुन्तलानां कलापैः
सम इह चलविद्युद्दामशोभः प्रसन्नः ।
करिगण इव कृष्णो नीरगण्डूषकारी
स्वनति मृदुगभीरं तोयवाहः सुकाले ।

(९)

क्व मिलति विषधृद्भिर्मित्रता चन्दनानाम् ?
क्व च मलयजगन्धो याति धीरः समीरः ?
क्व च वितरति मोदं शुभ्रकाश्मीरशोभा ?
प्रकृतिकलविलासो भारतादन्यतः क्व ?

❀

(१०)

क्व च मुनिगणपूर्णा आश्रमाः सम्भवन्ति ?
नवकिसलयरागा यत्र चित्तं हरन्ति।
त्यजति ऋजुमुनीनां क्रोडमागत्य यत्र
नवमृगसुतवृन्दं नाभिनालानि, चित्रम् !

(११)

क्वचिदपि हरिणाली सञ्चरन्ती चकास्ति
क्वचिदपि च गजानां यत्र यूथं प्रसन्नम्।
क्वचिदपि दृढनादो यत्र कण्ठीरवाणाम्
उपवन-वनभागा ईदृशाः कुत्र सन्ति ?

(१२)

धवलजलपवित्रा पापनाशे प्रसक्ता,
क्वणितजलतरङ्गा कच्छपीधारिणी च।
जलगणशुचिकर्त्री नीलकण्ठासना च
विलसति शुभगङ्गा शारदा च क्व शुभ्रा ?

❀

# दिव्यं मम भारतम्

विविधपण्डितमण्डलमण्डिता
प्रकृतिपुण्यविलाससमाहिता ।
विविधवीरवरावृतमण्डला
जयति भारतभूमिरियं भुवि ॥१॥

यस्मिल्लोकगणः सुखेन वसति
प्राप्तोऽभयं सर्वदा ।
गौरश्यामविभेदहीनजनता
यत्रास्ति कार्याकुला ।
स्वातन्त्र्येण चमत्कृतं च परितो
यत्रास्ति भूमण्डलम् ।
दिव्यं तन्मम भारतं विजयते
संसार-सम्भूषणम् ॥२॥

येषां देशसुरक्षणाय नभसि
प्रज्वालिते चानले ।
झञ्झावातसमेतवृष्टिषु मनो
यातुं सदा प्रस्तुतम् ।
सन्त्येतादृशवीरभावभरिता
यस्यान्तराले भटाः ।
भव्यं तन्मम भारतं विजयते ।
संसार-सम्भूषणम् ॥३॥

यत्स्वातन्त्र्यदिनप्रमोदसमये
मोदाकुला मेदिनी ।
आशाः सौरभमण्डिता विजयते
मुग्धस्त्रिरङ्गो ध्वजः ।
यत्रानेकविधैः प्रमोदकरणै-
रातिथ्यकृत्यैर्नवैः ।
मान्यन्तेऽतिथयः स मे विजयते
देशः सदा भारतम् ॥४॥

यन्त्रोद्योगकलानिकेतनयुतं
वैज्ञानिकैः पावितम् ।
कीर्तिश्रीयुतदेशभक्तचरितै-
श्चित्रं चमत्कारकम् ।
विद्यारक्षणदक्षपण्डितगणै-
र्नित्यं समाराधितम् ।
विस्तीर्णं वसुधातले विजयते
मे भारतं भारतम् ॥५॥

यद्भूमौ प्रवहन्ति देवसरिता
साकं नदीनां गणाः ।
यन्मूर्द्धा हिमशैलमण्डनयुतः
पादाः समुद्रादृताः ।
यन्मूर्मिनितरां सुवर्णसहिता
धान्यैः सदा दृश्यते ।
दिव्यं तन्मम भारतं विजयते
संसार - सम्भूषणम् ॥६॥

यद्वृन्दाविपिने मुकुन्दचरिता-
न्यद्यापि साक्षादिव ।
यत्काशीश्वरविश्वनाथकृपया
पापान्धकारापहा ।
यत्तीर्थानि सदैव पापदहनं
कुर्वन्ति शान्तं जलैः ।
भव्यं तन्मम भारतं विजयते
संसार - सम्भूषणम् ॥७॥

यस्मिन्नस्ति सहिष्णुतापरिमिता
तोषः परं राजते ।
यत्रास्ते ऋजुता परं प्रमुदिता
यस्मिश्च शान्तिः परा ।
वैपुल्यं भजते च यत्र विदुषां
पाण्डित्यपुञ्जं सदा ।
दिव्यं तन्मम भारतं विजयते
संसार - सम्भूषणम् ॥८॥

❀

# देववाणी-परिषदा प्रकाशिताः ग्रन्थाः



१. अर्वाचीनसंस्कृतमहाकाव्यविमर्शः(प्रथमखण्डः) रु० १५.००
(सं० : डा० रमाकान्तशुक्लः)
२. ,, ,, ,, (द्वितीयखण्डः) रु० ३०.००
३. ,, ,, ,, (तृतीयखण्डः) रु० ३०.००
४. कर्णभूषणम् (डा० सी०आर० स्वामिनाथन्) रु० ५.००
५. भाति मे भारतम् (डा०रमाकान्तशुक्लः) रु० ४०.००
६. श्रीकृष्णचरितम् (डा० रमेशचन्द्रशुक्लः) रु० ३०.००
७. सुगमरामायणम् ,, ,, रु० ३५.००
८. हरविजयस्य साहित्यिकमध्ययनम् रु० ६०.००
(डा० कृष्णकान्तशुक्लः)
९. श्रीमदप्पयदीक्षितचरितम् रु० २०.००
(डा०हरिनारायणदीक्षितः)
१०. भारतस्वातन्त्र्यसंग्रामेतिहासः(डा०र०च०शु०) रु० ३५.००
११. सदाशयसमुच्चयः (टी०वी०परमेश्वरअय्यरः) रु० १५.००
१२. आभाणकमञ्जरी ( ,, ,, ) रु० १५.००
१३. मेघदूत : एक विश्लेषण (डा० देवीदत्त शर्मा) रु० २०.००
१४. रघुवंश : एक विश्लेषण ( ,, ,, ) रु० २०.००
१५. अभिज्ञानशाकुन्तल : एक विश्लेषण ( ,, ) रु० २०.००
१६. कालिदास की कला और संस्कृति (भाग २) रु० ६०.००
(लेखक: डा० देवीदत्त शर्मा)
१७. जय भारतभूमे ! (डा० रमाकान्तशुक्लः) रु०. ३०.००
१८. राधाकृष्णरसायनम् रु० ४०.००
(श्री ओट्टूर उण्णि नम्बूदिरीपादः)
१९. अर्वाचीनसंस्कृतसाहित्यपरिचयः
(सं० डा० रमाकान्तशुक्लः)
२०. साधारणीकरण और समानान्तर चिन्तन की पूर्वपीठिका (डा० सुलेखचन्द्रशर्मा) रु० ५०.०
२१. अभिनवहनूमन्नाटकम्(डा० रमेशचन्द्रशुक्लः) रु० २०.०

प्राप्तिस्थानम्



'देववाणी-परिषद् दिल्ली', ६ वाणी-विहारः, नयी दिल्ली-५